विद्यते ॥२४॥ तस्मान्नत्वा चरेत् किञ्चिदशुभं लोकगर्हितम् ॥ सदाचारवता भाव्यं यथा धर्मो न नश्यति ॥२५ ॥ ये ध्यायन्ति मनोवृत्या करिष्यामः प्रबोधिनीम् ॥ तेषां विलीयते पापं पूर्वजन्म-शतोद्भवम् ॥२६ ॥ समतीतं भविष्यं च वर्तमानं कुलायुतम् । विष्णुलोकं नयत्याशु प्रबोधिन्यां तु जागरे ॥२७॥ वसन्ति पितरो हृष्टा विष्णुलोकेऽत्यलंकृताः ॥ विमुक्ता नारकैर्दुःखैःपूर्वक-र्मसमुद्भवैः ॥२८॥ कृत्वा तु पातकं घोरं ब्रह्महत्यादिकं नरः ॥ कृत्वा तु जागरं विष्णोर्धौतपापो भवेन्मुने ॥२९ ॥ दुष्प्राप्यं यत्फलं रम्यैरश्वमेधादिभिर्मखैः ॥ प्राप्यते तत्सुखेनैव प्रबोधिन्यां तु जागरे ॥३० ॥ आप्लुत्य सर्वतीर्थेषु दत्त्वा गाः काञ्चनं महीम् ॥ न तत्फलमवाप्नोति यत्कृत्वा जागरं हरे ॥३१ ॥ जातः स एव सुकृतो कुलं तेनैव पावितम् ॥ कार्तिके मुनिशार्दूल कृता येन प्रबोधिनी ॥३२ ॥ यथा ध्रुवं नृणां मृत्युर्धननाशस्तथा ध्रुवम् ॥ इति ज्ञात्वा मुनिश्रेष्ठ कर्तव्यं वैष्णवं दिनम् ॥३३ ॥ यानि कानि च तीर्थानि त्रैलोक्ये सम्भवन्ति च ॥ तानि तस्य गृहे सम्यग् यः करोति प्रबोधिनीम् ॥३४॥ सर्वकृत्यं परित्यज्य तुष्ट्यर्थं चक्रपाणिनः ॥ उपोष्यैकादशीं

है, उसको हरि प्रबोधिनी में दृष्टिगोचर नहीं होता, जो अप्रार्थित है, उसको हरि प्रबोधिनी देती है। जो मेरु तथा मन्दराचल के बराबर पाप है, उन सब को पाप हारिणी एक ही उपवास से नष्ट कर देती है। सैंकड़ों पूर्व जन्म के दुष्कर्मों के इकट्ठा हो जाने पर वह प्रबोधिनी के रात्रि के जागरण से रुई के ढेर के समान भस्म हो जाते हैं।

रम्यां कार्त्तिके हरिप्रबोधिनीम् ॥३५॥ स ज्ञानी स च योगी स च तपस्वी जितेन्द्रियः॥ भोगो मोक्षश्च तस्यास्ति ह्युपास्ते हरिप्रबोधिनीम् ॥३६॥ विष्णुप्रियतरा ह्येषा धर्मसारस्य दायिनी॥ सकृदेनामुपोष्यैव मुक्तिभाक् च भवेन्नरः ॥३७॥ प्रबोधिनीमुपोषित्वा न गर्भे विशते नरः॥ सर्वधर्मान्परित्यज्य तस्मात्कुर्वीत नारद ॥३८॥ कर्मणा मनसा वाचा पापं यत्समुपार्जितम्॥ तत्क्षालयति गोविन्दः प्रबोधिन्यां तु जागरे ॥३९॥ स्नानं दानं जपो होमः समुद्दिश्य जनार्दनम्॥ नरैर्यत्क्रियते वत्स प्रबोधिन्यां तदक्षयम् ॥४०॥ येऽर्चयन्ति नरास्तस्यां भक्त्या देवं च माधवम्॥ समुपोष्य प्रमुच्यन्ते पापैस्ते शतजन्मजैः ॥४१॥ महाव्रतमिदं पुत्र महापापौघनाशनम्॥ प्रबोध-वासरं विष्णोर्विधिवत्समुपोषयेत् ॥४२॥ व्रतेनानेन देवेशं परितोष्य जनार्दनम्॥ विराजयन्दिशः सर्वाः प्रयाति भवनं हरेः ॥४३॥ कर्तव्यैषा प्रयत्नेन नरैः कान्तिमभीप्सुभिः॥ द्वादशी द्विपदां श्रेष्ठ कार्तिके तु प्रबोधिनी ॥४४॥ बाल्ये यच्चार्जितं वत्स यौवने वार्धके तथा॥ शतजन्मकृतं पापं स्वल्पं वा यदि वा बहु ॥४५॥ शुष्कमार्द्रं मुनिश्रेष्ठ स्वगुह्यमपि नारद॥ तत्क्षालयति

हे मुनि शार्दूल, जो मनुष्य स्वभाव से ही विधिपूर्वक प्रबोधिनी का व्रत करता है, वह यथोक्त फल को प्राप्त करता है। जो मनुष्य इस सुकृत को विधिपूर्वक थोड़ा भी करता है, हे मुनिश्रेष्ठ, वह मेरु के तुल्य फलदाता हो जाता है। हे नारद, सन्ध्याहीन में, व्रतभ्रष्ट में, नास्तिक में, वेद निन्दक में, धर्मशास्त्र को दूषण करने वाले में,

गोविन्दमस्यामभ्यर्च्य भक्तितः ॥४६॥ धनधान्यवहा पुण्या सर्वपापहरा परा॥ तामुपोष्य हरेर्भक्त्या दुर्लभं न भवेत्क्वचित् ॥४७॥ चन्द्रसूर्योपरागे च यत्फलं परिकीर्तितम्॥ तत्सहस्रगुणं प्रोक्तं प्रबोधिन्यां तु जागरात् ॥४८॥ स्नानं दानं जपोहोमः स्वाध्यायोऽर्चनं हरेः॥ तत्सर्वं कोटितुल्यं तु प्रबोधिन्यां तु यत्कृतम् ॥४९॥ जन्मप्रभृति यत्पुण्यं नरेणाभ्यर्जितं भवेत्॥ वृथा भवति तत्सर्वमकृत्वा कार्तिकव्रतम् ॥५०॥ अकृत्वा नियमं विष्णोः कार्तिकं यः क्षिपेन्नरः॥ जन्मार्जितस्य पुण्यस्य फलं नाप्नोति नारद ॥५१॥ तस्मात्त्वया प्रयत्नेन देवदेवो जनार्दनः॥ उपासनीयो विप्रेन्द्र सर्वकामफलप्रदः ॥५२॥ परान्नं वर्जयेद्यस्तु कार्तिके विष्णुतत्परः॥ परान्न-वर्जनाद्वत्स चान्द्रायणफलं लभेत् ॥५३॥ न तथा तुष्यते यज्ञैर्न दानैर्वा गजादिभिः। यथा शास्त्र-कथालापैः कार्तिके मधुसूदनः ॥५४॥ ये कुर्वन्ति कथां विष्णोर्ये शृण्वन्ति समाहिताः॥ श्लोकं वा श्लोकपादं वा कार्तिके गोशतं फलम् ॥५५॥ सर्वधर्मान्परित्यज्य ममाग्रे कार्तिके नरैः॥ शास्त्रावधारणं कार्यं श्रोतव्यं च सदा मुने ॥५६॥ श्रेयसां लोभबुद्ध्या वा यः करोति हरेः

मूर्ख, कृतघ्न, वंचक में परस्त्री सेवक में धर्म स्थित नहीं होता। जो गुरु एवं ब्राह्मण के साथ अहंकार से वर्तता है, जिनका देह आचार से भ्रष्ट है, जो चांडालनी में गमन करता है। दुष्टों की सेवा करता है, इन सबका धर्म नष्ट हो जाता है। जो पतित मनुष्यों का संग करता है, उनके घर में जाता है, वह यमलोक में जाता है। स्वागत,

कथाम् ॥५१ ॥ कार्तिके मुनिशार्दूल कुलानां तारयेच्छतम् ॥५७ ॥ नित्यं शास्त्रविनोदेन कार्तिकं यः क्षिपेन्नरः ॥ निर्दहेत्सर्वपापानि यज्ञायुतफलं लभेत् ॥५८ ॥ नियमेन नरो यस्तु शृणुते वैष्णवीं कथाम् ॥ कार्तिके तु विशेषेण गोसहस्रफलं लभेत् ॥५९ ॥ प्रबोधवासरे विष्णोः कुरुते यो हरेः कथाम् ॥ सप्तद्वीपवतीदाने तत्फलं लभते मुने ॥६० ॥ श्रुत्वा विष्णुकथां दिव्यां येऽर्चयन्ति कथाविदम् ॥ स्वशक्त्या मुनिशार्दूल तेषां लोकाः सनातनाः ॥६१ ॥ ब्रह्मणो वचनं श्रुत्वा नारदः पुनरब्रवीत ॥ नारद उवाच ॥ विधानं ब्रूहि मे स्वामिन्नेकादश्याः सुरोत्तम ॥६२ ॥ चीर्णेन येन भगवन्यादृशं फलमाप्नुयात् ॥ नारदस्य वचः श्रुत्वा ब्रह्मा वचनमब्रवीत् ॥६३ ॥ ब्रह्मोवाच ॥ ब्राह्मे मुहूर्ते चोत्थाय ह्येकादश्यां द्विजोत्तम ॥ स्नानं चैव प्रकर्त्तव्यं दन्तधावनपूर्वकम् ॥६४ ॥ नद्यां तडागे कूपे वा वाप्यां गेहे तथैव च ॥ केशवञ्चैव सम्पूज्य कथायाः श्रवणं तथा ॥६५ ॥ नियमार्थे महाभाग इमं मन्त्रमुदीरयेत् ॥ एकादश्यां निराहारं स्थित्वाऽहनि परे ह्यहम् ॥६६ ॥ भोक्ष्यामि पुण्डरीकाक्ष शरणं मे भवाच्युत ॥ अमुं मन्त्रं समुच्चार्य देवदेवस्य चक्रिणः ॥६७ ॥

आसन, भोजन में जिन मनुष्यों के धर्म नष्ट हो जाते हैं, उनकी कीर्ति, आयु, सन्तति और सुख नाश को प्राप्त हो जाते हैं। हे मुनिवर, इस लोक में किंचित् भी निन्दित काम न करें, सदाचारी रहें, जिससे धर्म का नाश न हो। वही पुण्यशाली है जिसने अपने कुल को तारा है। जिस प्रकार मनुष्य का मरण निश्चित है, वैसे ही धन

भक्तिभावेन तुष्टात्मा ह्युपवासं समर्पयेत्॥ रात्रौ जागरणं कार्यं देवदेवस्य सन्निधौ ॥६८॥ गीतं नृत्यं च वाद्यं च तथा कृष्णकथां मुने॥ यः करोति सा पुण्यात्मा त्रैलोक्योपरि संस्थितः ॥६९॥ बहुपुष्पैर्बहुफलैः कर्पूरागुरुकुंकुमैः ॥ हरेः पूजा विधातव्यः कार्तिक्यां बोध-वासरे ॥७०॥ वित्तं शाठ्यं न कर्त्तव्यं सम्प्राप्ते हरिवासरे॥ यस्मात् पुण्यमसंख्यातं प्राप्यते मुनिसत्तम ॥७१॥ फलैर्नानाविधैर्दिव्यैः प्रबोधिन्यां तु जागरे॥ शंखे तोयं समादाय ह्यर्घो देयो जनार्दने ॥७२॥ यत्फलं सर्वतीर्थेषु सर्वदानेषु यत्फलम्॥ तत्फलं कोटिगुणितं दत्त्वाऽर्घं बोध-वासरे ॥७३॥ अगस्त्यकुसुमैर्दिव्यैः पूजयेद्यो जनार्दनम्॥ देवेन्द्रोऽपि मुनिश्रेष्ठ करोति कर-सम्पुटम् ॥७४॥ न तत्करोति विप्रेन्द्र तपसा तोषितो हरिः॥ यत्करोति हृषीकेशो मुनिपुष्पैरलं-कृतः ॥७५॥ बिल्वपत्रैश्च ये कृष्ण कार्तिके कालवर्धन॥ पूजयन्ति महाभक्त्या मुक्तिस्तेषां मयोदितः ॥७६॥ तुलसीदलपुष्पैश्च पूजयन्ति जनार्दनम्॥ कार्तिके सकलं वत्स पापं जन्मायुतं दहेत् ॥७७॥ दृष्ट्वा स्पृष्टाऽथवा ध्याता कीर्तिता नामिता स्तुता॥ रोपिता सेचिता नित्यं पूजिता

का नाश भी निश्चित है, इस बात को जानकर वैष्णव पुरुष हरि वासर के व्रत को अवश्य करें। इस व्रत को करके मनुष्य जनार्दन को सन्तुष्ट करके सब दिशाओं को प्रकाशित करता हुआ विष्णु लोक में जाता है। हे नारद, वही ज्ञानी है, वही योगी है, वही तपस्वी एवं जितेन्द्रिय है, उसको भोग और मोक्ष मिलता है, जो हरि

तुलसी शुभा ॥७८॥ नवधा तुलसीभक्तिं ये कुर्वन्ति दिने दिने ॥ युगकोटि सहस्त्राणि ते वसन्ति हरेर्गृहे ॥७९॥ रोपिता तुलसी यावत्कुरुते मूलविस्तरम् ॥ तावद्युगसहस्त्राणि तनोति सुकृतं मुने ॥८०॥ यावच्छाखाप्रशाखाभिर्बीजपुष्पदलैर्मुने ॥ तोषिता तुलसी पुंभिर्वर्धते वसुधा-तले ॥८१॥ कुले तेषां तु ये जाता ये भविष्यन्ति ये गताः ॥ आकल्पयुगसाहस्त्रं तेषां वासो हरेर्गृहे ॥८२॥ कदम्बकुसुमैर्देवं येऽर्चयन्ति जनार्दनम् ॥ तेषां यमालयो नैव प्रसादाच्चक्रपाणिनः ॥८३॥ दृष्ट्वा कदम्बकुसुमं प्रीतो भवति केशवः ॥ किं पुनः पूजितो विप्र सर्वकामप्रदो हरिः ॥८४॥ यः पुनः पाटलीपुष्पैः कार्तिके गरुडध्वजम् ॥ अर्चयेत्परया भक्त्या मुक्तिभागी भवेद्धि सः ॥८५॥ बकुलाशोककुसुमैर्येऽर्चयन्ति जगत्पतिम् ॥ विशोकास्ते भविष्यन्ति यावच्चन्द्रदिवाकरौ ॥८६॥ येऽर्चयन्ति जगन्नाथं करवीरैः सितासितैः ॥ चतुर्युगानि विप्रेन्द्र प्रीतो भवति केशवः ॥८७॥ मञ्जरीं सहकारस्य केशवोपरि ये नराः ॥ यच्छन्ति ते महाभागाः गोकोटिफलभागिनः । दूर्वाङ्-कुरैर्हरेर्यस्तु पूजाकाले प्रयच्छति ॥ पूजाफलं शतगुणं सम्यगाप्नोति मानवः ॥८८-८९॥ शमी-

प्रबोधिनी का व्रत करता है। स्नान, जप, होम, स्वाध्याय, विष्णु का पूजन यदि हरि प्रबोधिनी के दिन किया जाता है तो वह दुगना फल देता है। विष्णु की भक्ति के बिना जो मनुष्य कार्तिक मास को व्यतीत करता है वह जन्म के जोड़े हुए पुण्य के फल को खो देता है। हे नारद, एकादशी के दिन ब्राह्म मुहूर्त में (दोघड़ी रात्रि रहने

पत्रैस्तु ये देवं पूजयन्ति सुखप्रदम् ॥ यममार्गे महाघोरो निस्तीर्णस्तैस्तु नारद ॥९० ॥ वर्षाकाले तु देवेशं कुसुमैश्चम्पकोद्भवैः ॥ येऽर्चयन्ति न ते मर्त्याः संसरेयुः पुनर्भवे ॥९१ ॥ कुम्भीपुष्पं तु विप्रर्षे ये यच्छन्ति जनार्दने ॥ सुवर्णफलमात्रं ते लभन्ते वै फलं मुने ॥९२ ॥ सुवर्णकेतकीपुष्पं यो यच्छन्ति जनार्दने ॥ कोटिजन्मार्जितं पापं दहते गरुडध्वजः ॥९३ ॥ कुङ्कुमारुणवर्णाञ्च गन्धा-ढ्यां शतपत्रिकाम् ॥ यो ददाति जगन्नाथे श्वेतद्वीपालये वसेत् ॥९४ ॥ एवं सम्पूज्य रात्रौ च केशवं भुक्तिमुक्तिदम् ॥ प्रातरुत्थाय च ब्रह्मन् गत्वा तु सजलां नदीम् ॥९५ ॥ तत्र स्नात्वा जपित्वा च कृत्वा पौर्वाह्निकीः क्रियाः ॥ गृहे गत्वा च सम्पूज्य केशवं विधिवन्नरैः ॥९६ ॥ व्रतस्य पूरणार्थाय ब्राह्मणान् भोजयेत् सुधीः ॥ क्षमापयेच्च शिरसा भक्तियुक्तेन चेतसा ॥९७ ॥

पर) उठकर दन्तधावन कर स्नान करना चाहिये। भगवान् विष्णु की अर्चना कर कथा को सुने। एकादशी के दिन निराहार रहकर व्रत करें। प्रभु से प्रार्थना करें, हे पुण्डरीकाक्ष, हे अच्युत, मैं आप की शरण में हूं, शरण आये की रक्षा करो। भगवान् के द्वादशाक्षर मन्त्र का जप करें। रात्रि को प्रतिमा के समीप जागरण करें। उस समय प्रभु के नाम का कीर्तन करें, नृत्य करें, अनेक प्रकार के वाद्यों से प्रभु का स्मरण करें। अनेक प्रकार के पुष्पों, फल, कर्पूर, कुंकुमं आदि से भगवान् का पूजन करें। शंख में जल भर कर नारायण हरि को अर्घ प्रदान करें। हे मुनीश्वर, उत्तम अगस्त्य के फूलों से जो जनार्दन की पूजा करते हैं, अगस्त्य के पूलों से अलंकृत करते

गुरुपूजा ततः कार्या भोजनाच्छादनादिभिः॥ दक्षिणा गाश्च दातव्या तुष्ट्यर्थं चक्रपाणिनः ॥९८॥ भूयसी चैव दातव्या ब्राह्मणेभ्यः प्रयत्नतः॥ नियमश्चैव सन्त्याज्यो ब्राह्मणाग्रे प्रयत्नतः ॥९९॥ कथयित्वा द्विजेभ्यस्तद्दद्याच्छक्त्या च दक्षिणाम्॥ नक्तभोजी नरो राजन् ब्राह्मणान् भोजयेच्छुभान् ॥१००॥ अयाचिते बलीवर्द सहिरण्यं प्रदापयेत्॥ अमांसाशी नरो यस्तु प्रददेद्गां सदक्षिणाम् ॥१०१॥ धात्रीस्नायी नरो दद्याद्दधिमाक्षिकमेव च॥ फलानां नियमे राजन् फलदानं समाचरेत् ॥१०२॥ तैलस्थाने घृतं देयं घृतस्थाने पयः स्मृतम्॥ धान्यानां नियमे राजन् दीयन्ते शालितण्डुलाः ॥१०३॥ दद्याद् भूशयने शय्यां सतूलां सपरिच्छदाम्॥ पत्रभोजी नरो राजन् भाजनं घृतसंयुतम् ॥१०४॥ मौनी घण्टां तिलांश्चैव सहिरण्यं प्रदापयेत्॥

हैं, शृंगार करते हैं तथा विल्वपत्रों से पूजन करते हैं, उनके पाप भस्म हो जाते हैं। इस दिन तुलसी के दर्शन करने से, तुलसी की महिमा को कहने से, नमस्कार करने, स्तुति करने, तुलसी का वृक्ष लगाने से, प्रतिदिन पूजन करने से तुलसी मंगल देने वाली है। भगवान् की पूजा में, कदम्ब, वकुल, पाटलीपुष्प, अशोक, लाल कनेर, सफेद फूलों से नारायण हरि प्रसन्न हो जाते हैं। हे ब्रह्मन्, इस प्रकार से रात्रि में मुक्ति देने वाले केशव भगवान् की पूजा करके प्रातःकाल होने पर उठकर स्नान आदि करके, प्रातःकाल के कर्म को करके, विष्णु की पूजा करके, ब्राह्मण को भोजन करवाकर, उसको नमस्कार करके, क्षमा याचना करके पूरी तरह सन्तुष्ट करके,

दम्पत्योर्भोजनं देयं निःस्नेहं सर्पिषा युतम् ॥१०५॥ धारणे तु स्वकेशानामादर्शं दापयेद्बुधः ॥ उपानहौ प्रदातव्ये उपानत्परिवर्जनात् ॥१०६॥ लवणस्य च सन्त्यागे शर्करां च प्रदापयेत् ॥ नित्यं दीपः प्रदेयस्तु विष्णोर्वा विबुधालये ॥१०७॥ सदीपं सघृतं ताम्रं काञ्चनं वा दशायुतम् ॥ प्रदद्याद्विष्णुभक्ताय व्रतसम्पूर्तिहेतवे ॥१०८॥ एकान्तरोपवासे तु कुम्भानाष्टौ प्रदापयेत् ॥ सवस्त्रान् काञ्चनोपेतान् सर्वान् सालङ्कृतान् शुभान् ॥१०९॥ सर्वेषामप्यलाभे तु यथोक्तकरणं विना ॥ द्विजवाक्यं स्मृतं राजन् सम्पूर्णव्रतसिद्धिदम् ॥११०॥ नत्वा विसर्जयेद्विप्रांस्ततो भुञ्जीत च स्वयम् ॥ यत्त्यक्तं चतुरो मासान् समाप्तिं तस्य चाचरेत् ॥१११॥ एवं य आचरेत्प्राज्ञः सोऽनन्तफलमाप्नुयात् ॥ अवसाने तु राजेन्द्र वासुदेवपुरं व्रजेत् ॥११२॥ यश्चाविघ्नं समाप्यैवं चातुर्मास्यव्रतं नृप ॥ स भवेत्कृतकृत्यस्तु न पुनर्मानुषो भवेत् ॥११३॥ एतत् कृत्वा महीपाल परिपूर्णं व्रतं भवेत् ॥ व्रतवैकल्यमासाद्य ह्यन्धः कुष्ठी प्रजायते ॥११४॥ एतत्ते सर्वमाख्यातं यत्पृष्टोऽहमिह त्वया । पठनाच्छ्रवणाद्वापि भवेद्गोदानजं फलम् ॥११५॥

पश्चात् स्वयं भोजन करें। हे राजन्, इस प्रकार चातुर्मास व्रत को जो निर्विघ्नता से समाप्त करते हैं, वे कृत-कृत्य हो जाते हैं, फिर उन मनुष्यों का जन्म नहीं होता।

कार्तिक मास के शुक्ल पक्ष की हरि प्रबोधिनी एकादशी का माहात्म्य सम्पूर्ण हुआ।

## २५. मलमास शुक्लपक्ष पद्मिनी एकादशी

युधिष्ठिर उवाच॥ मलिम्लुचस्य मासस्य का वा एकादशी भवेत्॥ किं नाम को विधिस्तस्याः कथयस्व जनार्दन ॥१ ॥ श्रीकृष्ण उवाच॥ मम मासस्य या पुण्या प्रोक्ता च पद्मिनी। सोपोषिता प्रयत्नेन पद्मनाभपुरं नयेत् ॥२ ॥ मम मासे महापुण्या कीर्तिता कल्मषापहा ॥ तस्याः फलं कथयितुं न शक्तश्चतुराननः ॥३ ॥ नारदाय पुरा प्रोक्तं विधिना व्रतमुत्तमम्॥ पद्मिमन्याः पापराशिघ्नं भुक्तिमुक्तिफलप्रदम् ॥४ ॥ श्रुत्वा वाक्यं मुरारेस्तु प्रोवाच मुदितान्वितः ॥ युधिष्ठिरो जगन्नाथं विधिं पप्रच्छ धर्मवित् ॥५ ॥ श्रुत्वा राज्ञस्तु वचनं प्रीत्युत्फुल्लाम्बुजेक्षणः ॥ शृणु राजन् प्रवक्ष्यामि मुनीनामप्यगोचरम् ॥६ ॥ दशमीदिवसे प्राप्ते व्रतारम्भे विधीयते ॥ कांस्यं

युधिष्ठिर बोले, हे जनार्दन, मल मास के शुक्ल पक्ष में कौन सी एकादशी होती है, उसका क्या नाम है और कैसी विधि है, मुझसे कहिये। श्री कृष्ण बोले, कि मलमास में पापों का नाश करने वाली, भुक्ति-मुक्ति को देने वाली पद्मिनी नाम की एकादशी आती है, इसमें भगवान् पद्मनाभ का पूजन करना चाहिए। दशमी के दिन व्रत आरम्भ किया जाता है, कांस्यपात्र में भोजन, मांस, मसूर, चना, कोदो, शाक, मधु तथा दूसरे का अन्न ये आठ वस्तुएं दशमी के दिन वर्जित हैं। हविष्य अन्न (जौं-चावल आदि) तथा सेंधा

**मांसं मसूरांश्च चणकान् कोद्रवांस्तथा ॥७॥ शाकं मधु परान्नं च दशम्यामष्ट वर्जयेत् ॥ हविष्यान्नं च भुञ्जीत अक्षारलवणं तथा ॥८॥ भूमिशायी ब्रह्मचारी भवेच्च दशमीदिने ॥९॥ एकादशीदिने प्राप्तः प्रातरुत्थाय सादरम् ॥ विधाय च मलोत्सर्गं न कुर्याद्दन्तधावनम् ॥१०॥ कृत्वा द्वादशगण्डूषाञ्छुचिर्भूत्वा समाहितः ॥ सूर्योदये शभे तीर्थे स्नानार्थं प्रव्रजेत्सुधीः ॥११॥ गोमयं मृत्तिकां गृह्यं तिलान्दर्भाञ्छुचिस्तथा ॥ चूर्णैरामलकीभूतैर्विधिना स्नानमाचरेत् ॥१२॥ उद्धृतासि वराहेण कृष्णे शतबाहुना ॥ मृत्तिके ब्रह्मदत्तासि कश्यपेनाभिमन्त्रिता ॥१३॥ त्वं मे कुरु पवित्रांगं लग्ना नेत्रेशि रोरुहे ॥ हरिपूजनयोग्यं मां मृत्तिके कुरु ते नमः ॥१४॥ सर्वौषधि-**

नमक का प्रयोग करें। पृथ्वी पर शयन करें, ब्रह्मचर्य से रहे और एकादशी के दिन प्रातःकाल उठकर शौचादि से निवृत्त होकर, दन्तधावन कर पानी के बारह कुल्ले करके उत्तमतीर्थ में स्नान करने के लिये जाना चाहिये। गोबर, मिट्टी, तिल, कुशा लेकर पवित्र होकर आमले के चूर्ण को शरीर पर मलकर विधिपूर्वक स्नान करके इस मन्त्र को पढ़ें। हे मृत्तिके, शतवाहु वराह ने तुम को उठाया, तुझे ब्रह्मा को दिया गया, कश्यपमुनि ने तुम्हें अभिमन्त्रित किया, मेरे अंग, प्रत्यंग में लगाई हुई तू मुझे पवित्र कर। तुम को मेरा नमस्कार है। मुझे हरि पूजन करने के योग्य करो। समस्त औषधियों से उत्पन्न, गौ के उदर में स्थित, पृथ्वी को पवित्र करने वाला गोबर मुझे पवित्र करे। भुवन को पवित्र करने वाला धात्री (आमला)

समुत्पन्नं गवोदरमधिष्ठितम् ॥ पवित्रकरणं भूमे मां पावयतु गोमयम् ॥१५ ॥ ब्रह्मष्ठीवनसम्भूता धात्री भुवनपावनी ॥ संस्पृष्टा पावयांगं मे निर्मलं कुरु ते नमः ॥१६ ॥ देवदेव जगन्नाथ शंखचक्रगदाधर ॥ देहि विष्णो ममानुज्ञां तव तीर्थावगाहने ॥१७ ॥ वारुणांश्च जपेन्मन्त्रान् स्नानं कुर्याद्विधानतः ॥ गंगादितीर्थं संस्मृत्य यत्र कुत्र जलाशये ॥१८ ॥ पश्चात् संमार्जयेत् गात्रं विधिना नृपसत्तम ॥ मुखे पृष्ठे च हृदये बाह्वोः शिरसि चाप्यधः ॥१९ ॥ परिधाय सुखं वासः शुक्लं शुचि ह्यखण्डितम् ॥ ततः कुर्याद्धरेः पूजां महापापं विनश्यति ॥२० ॥ सन्ध्यामुपास्य विधिना तर्पयेच्च पितृन् सुरान् ॥ हरेर्मन्दिरमागत्य पूजयेत्कमलापतिम् ॥२१ ॥ स्वर्णमाषकृतं

को नमस्कार है। स्पर्श करने से मेरे शरीर को पवित्र करो। हे शंख, चक्र, गदाधारी, जगत के पति, हे देव देवेश, हे विष्णु, मुझे अपने तीर्थ में स्नान करने की आज्ञा प्रदान करो। ऐसा कहकर वरुण के मन्त्र का जप करके तथा गंगादि तीर्थों का स्मरण करके, जहां कहीं भी जलाशय हो उसमें विधिपूर्वक स्नान करें। हे नृप श्रेष्ठ, इसके बाद मुख, पीठ, हृदय, बाहु, सिर और शरीर का मार्जन करें। फिर जो फटा हुआ न हो, धोया गया हो या नवीन वस्त्र (सफेद) धारण करें। फिर सन्ध्या, वन्दन करके पितरों का तर्पण कर, विष्णु भगवान् के मन्दिर में आकर विधिपूर्वक लक्ष्मी सहित विष्णु का पूजन करें। फिर पार्वती सहित महादेव का विधिपूर्वक पूजन करें। मिट्टी या तांबे के कलश पर उत्तम वस्त्र रखकर उसमें देवता को बैठावें। वहां

देवं राधिकासहितं हरिम्॥ पार्वत्या सहितं देवं पूजयेद्विधिपूर्वकम्॥२२॥ कुम्भोपरि न्यसेद्देवं ताम्रपात्रेऽथ मृण्मये॥ दिव्यवस्त्रसमायुक्ते दिव्यगन्धानुवासिते॥२३॥ तस्योपरिन्यसेत्पात्रं ताम्ररौप्यहिरण्मयम्॥ तस्मिन् संस्थाप्येद्देवं विधिना पूजयेत्ततः॥२४॥ संस्थाप्य सलिलैः श्रेष्ठैर्गन्धधूपादिवासितैः॥ चन्दनागरुकर्पूरैः पूजयेद्देवमीश्वरम्॥२५॥ नानाकुसुमकस्तूरीकुङ्कुमेन सिताम्बुजैः॥ तत्कालजातैः कुसुमैः पूजयेत्परमेश्वरम्॥२६॥ नैवेद्यैर्विविधैः शक्त्या तथा नीराजनादिभिः॥ धूपैः दीपैः सकर्पूरैः पूजयेत्केशवं शिवम्॥२७॥ नृत्यं गीतं तदग्रे तु कुर्याद्-भक्तिपुरःमरम्॥ नालपेत्पतितान् पापांस्तस्मिन्नहनि न स्पृशेत्॥२८॥ नानृतं हि वदेद्वाक्यं

धूप, दीप, चन्दन, अगर, कपूर और जल से, स्थापित किये हुए भगवान् की पूजा करें। नाना प्रकार के पुष्प, श्वेत कमल, ऋतु में उत्पन्न पुष्पों से परमेश्वर की पूजा करें। शक्ति के अनुसार विविध प्रकार के नैवेद्य समर्पण करें, धूप, दीप, कर्पूर से केशव भगवान् तथा शिव जी का पूजन करें। नृत्य, गीत, कीर्तन करें। मिथ्या बात न करें। वैष्णवों सहित विष्णु भगवान् के सम्मुख बैठ कर मलमास के शुक्ल पक्ष की एकादशी की कथा को सुनें। इस एकादशी का व्रत निर्जल रह कर करना चाहिए। केंवल दुग्ध का आहार करें। रात्रि में जागरण करें। प्रथम प्रहर में नारियल का अर्घ्य देकर द्वितीय प्रहर में श्रीफल से अर्घ्य दे। तीसरे प्रहर में बीज पूरक (विजौरा) और चौथे प्रहर में सुपारी से अर्घ्य दें। अर्थात् पूजन करें या अर्पण

सत्यपूतं वचो वदेत् ॥ रजस्वलां न स्पृशेच्च न निन्देद्ब्राह्मणं गुरुम् ॥२९ ॥ पुराणे पुरतो विष्णोः शृणुयात् सह वैष्णवैः ॥ निर्जला सा प्रकर्तव्या या च शुक्ले मलिम्लुचे ॥३० ॥ जलपानेन वा कर्यादद्दुग्धहारेण नान्यथा ॥ रात्रौ जागरणं कुर्याद्गीतवादित्रसंयुतम् ॥३१ ॥ प्रथमे प्रहरे पूजा नारिकेलार्घमुत्तमम् ॥ द्वितीय श्रीफलैश्चैव तृतीये बीजपूरकैः ॥३२ ॥ चतुर्थे पूजयेत् पूगैर्नारंगैश्च विशेषतः ॥ प्रथमे प्रहरे पुण्यमग्निष्टोमस्य जायते ॥३३ ॥ द्वितीये वाजपेयस्य तृतीये हयमेधजम् ॥ चतुर्थे राजसूयस्य जाग्रतो जायते फलम् ॥३४ ॥ नातः परतरं पुण्यं नातः परतरा मखाः ॥ नातः परतरा विद्या नातः परतरं तपः ॥३५ ॥ पृथिव्यां यानि तीर्थानि क्षेत्राण्यायतनानि च ॥ तेन

करें। प्रथम प्रहर में जागरण से अग्निष्टोम यज्ञ के फल की प्राप्ति होती है। दूसरे प्रहर में वाजपेय, तीसरे में अश्वमेध और चौथे में राजसूय यज्ञ के फल की प्राप्ति होती है। इस व्रत से बढ़कर न कोई पुण्य है न ही कोई यज्ञ है। न ही कोई विद्या है, न ही कोई तप है। इस प्रकार सूर्योदय पर्यन्त जागरण करके सूर्य के उदय हो जाने पर उत्तम तीर्थ में जाकर स्नान करने के पश्चात् विष्णु की पूजा करें। पूजा करने के पश्चात् कलश एवं कलश पर स्थापित विष्णु की प्रतिमा को दक्षिणा के साथ ब्राह्मण को अर्पित कर दें। फिर व्रत का पारणा करना चाहिए। हे नृप श्रेष्ठ, मलमास के कृष्णपक्ष की जो एकादशी है, उसकी भी यही विधि है। इस एकादशी की मनोरम कथा को मैं तुम से कहता हूं, जिस को पुलस्त्य मुनि ने नारद जी के पूछने

**स्नानानि दृष्टानि येनाकारि हरेर्व्रतम् ॥३६॥ एवं जागरणो कुर्याद्यावत् सूर्योदयो भवेत्॥ सूर्योदये शुभे तीर्थे गत्वा स्नानं सामचरेत् ॥३७॥ स्नात्वैवागत्य भावेन पूजयेद्देवमीश्वरम्॥ पूर्वोदितेन विधिना भोजयेद्ब्राह्मणान् शुभान् ॥३८॥ कुम्भादिकं च यत्सर्वं प्रतिमां केशवस्य च॥ पूजयित्वा विधानेन ब्राह्मणाय समर्पयेत् ॥३९॥ एवं विधं व्रतं यो वै कुरुते भुवि मानवः॥ सफलं जायते तस्य व्रतं मुक्तिफलप्रदम् ॥४०॥ एतत्ते सर्वमाख्यातं यत्पृष्टोऽहं त्वयाऽनघ॥ मलिम्लुचस्य मासस्य शुक्लाया विधिमुत्तमम् ॥४१॥ व्रतानि तेन चीर्णानि सर्वाणि नृपनन्दन॥ पद्मिन्याः प्रीतियुक्तो यः कुरुते व्रतमुत्तमम् ॥४२॥ कृष्णायाः मलमासस्य विधिस्तस्यापि तादृशः॥ परमा सा तु विज्ञेया सर्वपापक्षयंकरी ॥४३॥ अत्र ते कथयिष्यामि कथामेकां**

पर कहा था। कारागर में कार्तवीर्य द्वारा कैद किये हुए रावण को पुलस्त्य मुनि ने उस राजा से याचना करके छुड़ा दिया था। तब यह आश्चर्य सुनकर मुनिश्रेष्ठ नारद जी से भक्ति पूर्वक पूछने लगे कि इन्द्र के साथ देवताओं को जिस रावण ने जीत लिया था, उस बलशाली रावण को कार्त्तवीर्य ने किस प्रकार जीत लिया, नारद जी का वचन सुनकर पुलस्त्य मुनि कहने लगे, हे वत्स, सुनो, कार्तवीर्य की उत्पत्ति मैं तुमसे कहता हूं। पहले त्रेता युग में हैहय नामक राजा के वंश में कृतवीर्य उत्पन्न होकर महिष्मतीपुरी का राजा बना। उस राजा की एक हज़ार स्त्रियां थीं, परन्तु उनमें किसी भी स्त्री के राजा के भार को संभालने वाला

मनोरमाम् ॥ नारदाय पुलस्त्येन विस्तरेण निवेदिताम् ॥४४॥ कार्तवीर्येण कारायां निक्षिप्तं वीक्ष्य रावणम् ॥ विमोचितः पुलस्त्येन याचयित्वा महीपतिम् ॥४५॥ तदाश्चर्यं तदा श्रुत्वा नारदो दिव्यदर्शनः ॥ पप्रच्छ च यथा भक्त्या पुलस्त्यं मुनिपुंगवम् ॥४६॥ नारद उवाच॥ दशाननेन विजिताः सर्वे देवाः सवासवाः ॥ कार्तवीर्येण विजितः कथं रणविशारदः ॥४७॥ नारदस्य वचः श्रुत्वा पुलस्त्यो मुनिरब्रवीत॥ पुलस्त्य उवाच॥ शृणु वत्स प्रवक्ष्यामि कार्तवीर्यसमुद्भवम् ॥४८॥ पुरा त्रेतायुगे राजन् माहिष्मत्यां बृहत्तरः ॥ हैहयानां कुले जातः कृतवीर्यो महीपति ॥४९॥ सहस्त्रं प्रमदास्तस्य नृपस्य प्राणवल्लभाः ॥ न तासां तनयं कञ्चिल्लेभे राज्यधुरन्धरम् ॥५०॥ यजन्देवान् पितृन् सिद्धान् प्रतिपूज्य बृहत्तरान् ॥ तेषां वाक्याद् व्रतं

पुत्र नहीं हुआ। देवता, पितर, सिद्ध तथा बड़े-बड़े श्रेष्ठों का पूजन और उनकी आज्ञानुसार व्रतों को करने पर भी राजा को पुत्र की प्राप्ति नहीं हुई। तब पुत्र के बिना राजा को राज्य का कुछ भी सुख अनुकूल नहीं लगता था। जिस प्रकार क्षुधित मनुष्य को भोग-विलास उपयुक्त नहीं लगते, उस प्रकार बिना पुत्र के राजा को राज्य भी सुखदायी प्रतीत नहीं लगते, उस प्रकार बिना पुत्र के राजा को राज्य भी सुखदायी प्रतीत नहीं होता था। तब उस राजा ने वन में तपस्या करने का विचार बना लिया। इस प्रकार सोचकर उसी समय चीर वस्त्र पहन कर जटा बनाकर अच्छे मन्त्री को घर एवं राज्य का भार सौंपकर तपस्या करने के निमित्त यात्रा

कुर्वन्नलब्धस्तनयस्तदा ॥५१॥ सुतं विना तदा राज्यं न सुखाय महीपतेः॥ क्षुधितस्य यथा भोगा न भवन्ति सुखप्रदाः ॥५२॥ विचार्य चित्ते नृपतिस्तपस्तप्तुं मनो दधे॥ तपसैव सदा सिद्धिर्जायते मनसेप्सिता ॥५३॥ इत्युक्त्वा स हि धर्मात्मा चीरवासा जटाधरः॥ तपस्तप्तुं गतः सद्यो गृहे न्यस्य सुमन्त्रिणम् ॥५४॥ निर्गतं नृपतिं वीक्ष्य पद्मिनी प्रमदोत्तमा॥ हरिश्चन्द्रस्य तनया इक्ष्वाकुकुलसम्भवा ॥५५॥ पतिव्रता प्रियं दृष्ट्वा तपस्तप्तुं कृतोद्यमम्॥ भूषणानि परित्यज्य चीरमेकं समाश्रयत् ॥५६॥ जगाम पतिना सार्द्धं पर्वते गन्धमादने॥ गत्वा तत्र तपस्तेपे वर्षाणामयुतं नृपः ॥५७॥ न लेभे तनयं राज्ये ध्यायन्देवं गदाधरम्॥ अस्थिस्नायुमयं कान्तं

की। पति को इस प्रकार घर से निकलते देखकर, इक्ष्वाकु वंश में उत्पन्न स्त्रियों में श्रेष्ठ हरिश्चन्द्र राजा की कन्या पद्मिनी नामक उस राजा की रानी पति को तपस्या में लगे जानकर अपने शरीर में पहने हुए आभूषणों को उतारकर एक वस्त्र को धारण कर गन्धमादन पर्वत पर पति के साथ रहने लगी। वहां रहते हुए राजा ने अनेक वर्षों तक तप किया। गदाधर देव का ध्यान करते रहे, परन्तु पुत्र की प्राप्ति नहीं हुई। हाड-मांस और नसों वाले दुर्बल शरीर वाले पति को देखकर वह पतिव्रता स्त्री विनयपूर्वक साध्वी अनुसूया से पूछने लगी, हे साध्वी, मेरे पति को तप करते हुए अनेक वर्ष व्यतीत हो गये हैं, मगर क्लेश को नाश करने वाले भगवान् केशव हम पर प्रसन्न नहीं हुए, हे महामाये, मुझ से यथार्थ व्रत को कहो,

दृष्ट्वा सा प्रमदोत्तमा ॥५८॥ अनुसूयां महासाध्वीं पप्रच्छ विनयान्विता ॥ भर्तुः प्रतपतः साध्वि वर्षाणामयुतं गतम् ॥५९॥ तथापि न प्रसन्नोऽभूत्केशवः कष्टनाशनः ॥व्रतं मम महाभागे कथयस्व यथातथम् ॥६०॥ येन प्रसन्नो भगवान् मम भक्त्या प्रजायते ॥ येन मे जायते पुत्रश्चक्रवर्ती बृहत्तरः ॥६१॥ श्रुत्वा तस्यास्तु वचनं पतितव्रतपरायणा ॥ या प्रव्रजन्तं नृपतिं स्वयं वव्राज दीक्षितम् ॥६२॥ तदा प्रोवाच संहृष्टा पद्मिनीं पद्मलोचनाम् ॥ स्नात्वा मलिम्लुचे सुभ्रु मासद्वादशसंमते ॥६३॥ त्रिंशद्दिनैश्च भवति मासः पूर्ण शुभानने। तन्मध्ये द्वादशीयुग्मं पद्मिनी परमा तथा ॥६४॥ उपोष्य तत्प्रकर्तव्यं विधिना जागरैः समम् ॥ शीघ्रं प्रसन्नो भगवान्भविष्यति सुतप्रदः ॥६५॥ इत्युक्त्वाऽकथयत्सर्वं मया पूर्वोदितं नृप ॥ विधिं व्रतस्य

जिस व्रत से मेरी भक्ति से भगवान् प्रसन्न हों और मुझे चक्रवर्ती पुत्र की प्राप्ति हो। पातिव्रत्य परायण, पति को तप के लिये जाते देखकर स्वयं भी पति के साथ तप करने के लिये आई हुई उस पद्म लोचना पद्मिनी से साध्वी अनुसूया ने कहा, हे सुभ्रु, बारह मास के बीच जो मलमास आता है, उसमें पद्मिनी नाम की एकादशी आती है, हे शुभानने, तीन दिन में एक मास पूरा होता है उसके मध्य में द्वादशी युक्त दो एकादशी आती हैं, एक पद्मिनी तथा दूसरी परमा। जागरण सहित उन दोनों एकादशियों का विधि पूर्वक व्रत करो। उस व्रत के प्रभाव से भगवान् आप पर प्रसन्न होंगे, और पुत्र की प्राप्ति होगी। हे नृप, कर्दम ऋषि की पुत्री

विधिवत्प्रसन्ना कर्दमांगजा ॥६६ ॥ श्रुत्वा व्रतविधिं सर्वं यथोक्तमनसूयया ॥ चार्वंग्यकृतंतत्सर्वं पुत्रप्राप्तिमभीप्सति ॥६७ ॥ एकादश्यां निराहारा सदा जाता च निर्जला ॥ जागरेण युता रात्रौ गीतनृत्यसमन्विता ॥६८ ॥ पूर्णे व्रते च वै शीघ्रं प्रसन्नः केशवः स्वयम् ॥ बभाषे गरुडारूढो वरं वरय शोभने ॥६९ ॥ श्रुत्वा वाक्यं जगद्धातुः स्तुत्वा प्रीत्या शुचिस्मिता ॥ ययाचेऽद्य वरं देहि मम भर्तुर्बृहत्तरम् ॥७० ॥ पद्मिन्यास्तद्वचः श्रुत्वा प्रीत्या शुचिस्मिता ॥ ययाचेऽहं तोषितो भद्रे प्रत्युवाच जनार्दनः ॥७१ ॥ मलिम्लुचश्च मासोऽसौ नाऽन्यो मे प्रीतिदायकः ॥ तन्मध्यैकादशी रम्या मम प्रीतिविवर्धिनी ॥७२ ॥ सा त्वयोपोषिता सुभ्रु यथोक्तविधिनाऽमुना ॥ तेन त्वया प्रसन्नोऽहं कृतोऽस्मि शुभगानने ॥७३ ॥ तव भर्तुः प्रदास्यामि वरं यन्मनसेप्सितम् ॥

अनुसूया ने प्रसन्न होकर व्रत करने की पूरी विधि बतला दी। साध्वी अनुसूया द्वारा बतलाई गई विधि को सुनकर सुन्दर अंग वाली उस रानी पद्मिनी ने व्रत करना आरम्भ कर दिया। पुत्र प्राप्ति की इच्छा वाली उस रानी ने एकादशी के दिन निराहार रह कर रात्रि जागरणपूर्वक व्रत किये। व्रत के पूर्ण होने पर शीघ्र ही प्रसन्न हो गरुड़ पर आरूढ़ होकर केशव भगवान् आकर बोले, हे शोभने, मैं तुम पर प्रसन्न हूं। यथेप्सित वर को मांग। श्रीभगवान् के वचन सुनकर मन्दहास्य वाली उस रानी ने भगवान् की स्तुति करके शुद्ध मन से कहा, हे भगवन् मेरे पति को आप वर दीजिये। पद्मिनी रानी का यह वचन सुनकर भगवान् नारायण

इत्युक्त्वा नृपतिं प्राह विष्णुर्विश्वार्ति नाशनः ॥७४॥ वरं वरय राजेन्द्र यत्ते मनसि कांक्षितम् ॥ सन्तोषितोऽहं प्रियया तव सिद्धिर्चिकीर्षया ॥७५॥ श्रुत्वा तद्वचनं विष्णोः प्रसन्नो नृपसत्तमः ॥ बव्रे सुतं महाबाहुं सर्वलोकनमस्कृतम् ॥७६॥ न देवैर्मानुषैर्नागैर्दैत्यदानव राक्षसैः ॥ जेतुं शक्ये जगन्नाथ विना त्वां मधुसूदन ॥७७॥ इत्युक्तो बाढमित्युक्त्वा तत्रैवान्तरधीयत ॥ नृपोऽपि सुप्रसन्नात्मा हृष्टः पुष्टः प्रियायुतः ॥७८॥ समयात्स्वपुरं रम्यं नरनारी-मनोरमम् । स पद्मिन्यां सुतं लेभे कार्त्तवीर्यं महाबलम् ॥७९॥ न तेन सदृशः कश्चित् त्रिषु लोकेषु मानवः ॥ तस्मा-त्पराजितः संग्ख्ये रावणो दशकन्धरः ॥८०॥ न तं जेतुं समर्थोऽस्ति त्रिषु लोकेषु कश्चन ॥

बोले, हे भद्रे, मैं तुमसे प्रसन्न हूं। मल मास मुझे सब से प्यारा मास है, उस मास में मेरी प्रीति बढ़ाने वाली सुन्दर एकादशी है, हे सुभ्रु, तुमने जो एकादशी का शास्त्र विधि से व्रत किया है। हे शुभानने, इसलिये मैं तुम पर प्रसन्न हूं। तेरे पति को मन चाहा वर दूंगा। ऐसा कहकर विश्व का दुःख हरने वाले भगवान् विष्णु ने राजा से कहा, हे राजन्, तुम मुझ से जो चाहते हो, वह मुझ से मांगो, तुम्हारे कार्य की सिद्धि के लिये मैं तुम्हारी पत्नी द्वारा प्रसन्न किया गया हूं। भगवान् विष्णु के ऐसे शुभ वचनों को सुनकर प्रसन्न हुए राजा ने सब लोकों द्वारा वन्दित, महाबाहु पुत्र को मांगा। हे मधुसूदन, वह पुत्र ऐसा हो, जो देवता, मनुष्य नाग, दैत्य, दानव, राक्षस आदि से वन्दित हो। इनमें से किसी से भी न हारे, केवल तुम्हारे द्वारा ही जीता जाये।

विना नारायणं देवं चक्रपाणिं गदाधरम् ॥८१॥ न त्वया विस्मयः कार्यो रावणस्य पराजये ॥ मलिम्लुचप्रसादेन पद्मिन्याश्चाप्युपोषणात् ॥८२॥ दत्तो दैवाधिदेवेन कार्तवीर्यो महाबलः ॥ इत्युक्त्वा प्रययौ विप्रः प्रसन्नेनान्तरात्मना ॥८३॥ श्रीकृष्ण उवाच॥ एतत्ते सर्वमाख्यातं यत्पृष्टोऽहं त्वयाऽनघ॥ मलिम्लुचस्य मासस्य शुक्लायाः सम्भवो महान् ॥८४॥ ये करिष्यन्ति मनुजास्ते यास्यन्ति हरेः पदम्॥ त्वमेवं कुरु राजेन्द्र यदि चेष्टमभीप्ससि ॥८५॥ केशवस्य वचः श्रुत्वा धर्म राजोऽति-हर्षितः॥ चक्रे व्रतं विधानेन बन्धुभिः परिवारितः ॥८६॥ सूत उवाच॥ एतत्ते सर्वमाख्यातं यत्पृष्टोऽहं पुरा द्विज॥ पुण्यं पवित्रं परमं किं भूयः श्रोतु-मिच्छसि ॥८७॥ एवं विधं येऽपि व्रतं मनुष्या भक्त्या करिष्यन्ति मलिम्लुचस्य॥ उपोषिता

भगवान् आशीर्वाद देकर अन्तर्धान हो गये। प्रसन्न आत्मा वाला राजा अपनी पत्नी के साथ नर-नारियों से भरे हुए सुन्दर अपने नगर में आ गया। समय पाकर उस राजा के कार्त्तवीर्य नामक महाबली पुत्र उत्पन्न हुआ। हे राजन्, तीनों लोकों में उसके समान बलशाली कोई मनुष्य नहीं था। दशकन्धर रावण उस से हार गया। चक्रपाणी गदाधर नारायण देव के बिना तीनों लोकों में उसे जीतने में कोई समर्थ नहीं था। मलमास के प्रभाव से और पद्मिनी के व्रत के कारण रावण को हराने में आश्चर्य नहीं करना चाहिये। देवाधिदेव भगवान् विष्णु के वर के प्रभाव से कार्त्तवीर्य महाबली था। ऐसा वृत्तान्त नारद से कहकर प्रसन्न हृदय से

यैस्तु सुखप्रदात्री या शुक्लपक्षे भुवि तेऽपि धन्याः ॥८८॥ श्रोष्यन्ति ये तस्य विधिं समग्रं तेऽप्यंशभाजा मनुजाः प्रशस्ताः॥ ये वै पठिष्यन्ति कथां समग्रां ते वै गमिष्यन्ति हरेर्निवासम् ॥८९॥

पुलस्त्य ऋषि आश्रम को गये। श्री कृष्ण बोले, हे अनघ, जो तुमने पूछा, वह सब आप के समक्ष विस्तार से कह दिया है। यह हरि वासर पुण्यप्रद है, परम पवित्र है। जो भी मनुष्य इस मल मास का व्रत करेंगे, वे लोग इस पृथ्वी पर धन्य हैं। उनका जीवन सफल है।

**मलमास के शुक्ल पक्ष की पद्मिनी एकादशी का माहात्म्य सम्पूर्ण हुआ॥**

## २६. मलमास कृष्णपक्ष परमा एकादशी

युधिष्ठिर उवाच॥ मलिम्लुचस्य मासस्य कृष्णा का कथ्यते विभो॥ किं नाम को विधिस्तस्याः कथयस्व जगत्पते ॥१॥ श्रीकृष्ण उवाच॥ परमेति समाख्याता पवित्रा पापहारिका॥ भुक्तिमुक्तिप्रदा नृणां भोगदा च युधिष्ठिर ॥२॥ पूर्वोक्तविधिना कार्यं शुक्लायाः

युधिष्ठिर बोले, जगत् के स्वामी, मलमास के कृष्णपक्ष में किस नाम की एकादशी आती है। उसकी क्या विधि है। कृपा करके कहिये। श्री कृष्ण बोले, हे युधिष्ठिर, पापों को हरने वाली, भोग और मोक्ष को देने वाली

**सदृशेन वै। पूजयेत्परया भक्त्या नाम्ना देवं नरोत्तमम् ॥३ ॥ अत्र ते कथयिष्यामि कथामेतां मनोरमाम् ॥ काम्पिल्यनगरे जातां मुनीनामग्रतः श्रुताम् ॥४ ॥ आसी द्द्विजवरः कश्चित्सुमेधा नाम धार्मिकः ॥ तस्य पत्नी पवित्राख्या पातिव्रत्यपरायणा ॥५ ॥ कर्मणा केनचिद्विप्रो धन-धान्यविवर्जितः ॥ न क्वापि लभते भिक्षां याचन्नापि नरान् बहून् ॥६ ॥ न भोज्यं लभते तादृङ् न वस्त्रं नैव मण्डनम् ॥ रूपयौवनमाधुर्यं नारी शुश्रूषते पतिम् ॥७ ॥ अतिथिं पूजयेत्क्वापि तदा सा क्षुधिता गृहे ॥ तिष्ठत्येव विशालाक्षी न म्लानमुखपङ्कजा ॥८ ॥ विलोक्य भार्यां सुदतीं**

इस पवित्र एकादशी का नाम परमा है। जिस प्रकार शुक्ल पक्ष की एकादशी की विधि कही गई है, उसी विधि से इस एकादशी को करना चाहिये। परम भक्ति से नरोत्तम देव की पूजा करनी चाहिये। इस कथा को आप से कहता हूं। जो काम्पिल्य नगर में हुई थी, जो मुनियों से सुनी थी। पहले समय में सुमेधा नाम के एक धर्मात्मा ब्राह्मण हुए। उनकी पतिव्रता स्त्री, धर्म पारायण थी। उसका नाम पवित्रा था। किसी कर्म से वे धन-धान्य से रहित हो गये। बहुत लोगों से मांगने पर भी उन्हें भिक्षा नहीं मिलती थी। जिससे न अनुकूल भोजन मिल पाता, न ही अनुकूल-वस्त्र मिल पाते। रूप, यौवन एवं माधुर्य की मूर्ति वह ब्राह्मणी अपने पति की फिर भी सेवा में संलग्न रहती थी। यदि कोई अतिथि आ जाता तो भूखी ही रह जाती थी। फिर उसका मुख मलिन नहीं होता था। सुन्दर दांतों वाली वह भार्या शरीर से कृश होने लगी। उसने यह कभी नहीं कहा कि घर में अन्न नहीं है।

कर्शन्तीं स्वकलेवरम् ॥ न भर्त्तारं क्वचिच्चैव नास्त्यन्नमिति भाषते ॥९ ॥ विचार्य ब्राह्मणश्चित्ते भार्यायाः प्रेमबन्धनम् ॥ निन्दन्भाग्यं स्वकं विप्रः प्रोचे वाक्यं प्रियंवदाम् ॥१० ॥ कान्ते करोमि किं कार्यं न मया लभ्यते धनम् ॥ याचयामि नरान् भव्यान्न यच्छन्ति च मे धनम् ॥११ ॥ किं करोमि क्व गच्छामि त्वं मे कथय शोभने ॥ विना धनेन सुश्रोणि गृहकार्यं न सिध्यति ॥१२ ॥ देह्याज्ञां परदेशाय गच्छामि धनलब्धये ॥ तस्मिन्देशे च यद्भाव्यं भाग्यं तत्रैव लभ्यते ॥१३ ॥ उद्यमेन विना सिद्धिः कर्मणां नोपलभ्यते ॥ तस्माद् बुधाः प्रशंसन्ति सर्वथैव शुभोद्यमम् ॥१४ ॥

वह ब्राह्मण भार्या के दृढ़ प्रेम के कारण अपने भाग्य को कोसने लगा। अपनी प्रियतमा भार्या से बोला, हे कान्ते, मैं क्या काम करूं, मुझे धन नहीं मिल रहा। उत्तम मनुष्य से याचना करने पर भी मुझे कोई धन नहीं देता। क्या करूं, कहां जाऊँ? हे शोभने, तू मुझ से कह। हे सुश्रोणी, धन के बिना घर का काम नहीं चलता। मुझे परदेश जाने की आज्ञा दो, मैं धन की प्राप्ति के लिये जाऊँ। बिना उद्यम के कार्य में सिद्धि नहीं होती, बुद्धिमान् लोग सदैव उद्यम की प्रशंसा करते हैं। उस विदेश में जो भाग्य में लिखा होगा, मिल जाएगा। पति के ऐसे वचनों को सुनकर वह सुलोचना आंखों में आंसु भर कर दोनों हाथ जोड़ कर विनम्रता से बोली, हे पतिदेव, आप से अधिक कोई ज्ञानी नहीं है, आप की कही गयी बात को भी कहती हूं। विपत्ति में सदैव स्थिर बुद्धि से ही रहना चाहिये, ऐसा हितैषी लोग कहते हैं। भूतल में बिना दान के सुवर्ण मेरू पर्वत में भी नहीं मिलता, पूर्व की दी

श्रुत्वा कान्तस्य वचनं साश्रुनेत्रा विचक्षणा ॥ प्रोवाच प्राञ्जलिर्भूत्वा विनयानतकन्धरा ॥१५ ॥
त्वत्तो नास्ति सुविज्ञाता त्वयाऽऽज्ञप्ता ब्रवीम्यहम् ॥ हितैषिणो नरा ब्रूयुः शश्वदापद्गता अपि ॥१६ ॥ पूर्वदत्तं हि लभते यत्र कुत्र महीतले ॥ विना दानं न लभ्येत मेरौ कनकपर्वते ॥१७ ॥
पूर्वदत्ता हि या विद्या पूर्वदत्तं हि यद्धनम् ॥ पूर्वं दत्ता हि या भूमिरिह जन्मनि लभ्यते ॥१८ ॥
यद्धात्रा लिखितं भाले तत्तत्रैव हि लभ्यते ॥ विना दत्तेन किं क्वापि लभ्यते नैव किञ्चन ॥१९ ॥
पूर्वजन्मनि विप्रेन्द्र न मया न त्वया क्वचित् ॥ सत्पात्राणां करे दत्तं स्वल्पं भूर्यपि सद्धनम् ॥२० ॥
इह देशे परे वापि दत्तं सर्वत्र लभ्यते ॥ अन्नमात्रं तु विश्वेशो विना दत्तं च यच्छति ॥२१ ॥
तस्मादत्रैव भो विप्र स्थातव्यं भवता मया ॥ भवद्विना न तिष्ठामि क्षणमात्रं महामुने ॥२२ ॥

हुई जो विद्या है और पूर्व में जो दिया हुआ धन है और पूर्व में दी हुई जो भूमि है वही इस जन्म में मिलती है। विधाता ने माथे पर जो लेख लिख दिया है वही मिलता है। क्या बिना दिये भी कुछ मिलता है? हे द्विज श्रेष्ठ, पूर्व जन्म में आपने या मैंने सत्पात्रों को कभी धन नहीं दिया है। इस देश में अथवा परदेश में दिया हुआ सर्वत्र मिलता है। मगर जगत् पिता, विश्वेश्वर बिना मांगे भी अन्न दे देते हैं। हे विप्रवर, आपको यहीं रहना चाहिये, हे श्रेष्ठ, आपके बिना मैं क्षण भर भी अकेली नहीं रह सकती। जो स्त्री पति से बिछुड़ती है, उसका माता-पिता, भाई-बन्धु, सास-ससुर, अन्य कोई व्यक्ति आदर नहीं करता। बल्कि पति से विहीन स्त्री को लोग दुर्भगा कहते

माता न पिता भ्राता न श्वश्रूः श्वशुरो जनाः॥ न सत्कुर्वन्ति केऽपि स्त्रीं स्वजनाश्च पुरे कुतः॥२३॥ भर्तृहीनां विनिन्दन्ति दुर्भगेति वदन्ति ताम्॥ तस्मादत्र स्थिरो भूत्वा विहरस्व यथासुखम्॥२४॥ भवतां भाग्ययोगेन प्राप्तिश्चात्र भविष्यति॥ श्रुत्वा तस्यास्तु वचनं स्थितस्तत्र विचक्षणः॥२५॥ तावत्तत्र समायातः कौण्डिन्य मुनिसत्तमः॥ दृष्ट्वा समागतं हृष्टं सुमेधा द्विजसत्तमः॥२६॥ सभार्यः सहसोत्थाय ननाम शिरसाऽसकृत्॥ धन्योऽस्म्यनुगृहीतोऽस्मि सफलं जीवितं मम॥२७॥ यद्दृष्टोऽसि महद्भाग्यादित्युवाच मुनीश्वरम्॥ दत्त्वा सुविष्टरं तस्मै पूजयामास तं द्विजम्॥२८॥ भोजयित्वा विधानेन पप्रच्छ प्रमदोत्तमा॥ विद्वन्केन प्रकारेण दारिद्र्यस्य क्षयो भवेत्॥२९॥ विना दत्तं कथं लभ्येद्धनं विद्यां कुटुम्बिनीम्॥ मां भर्त्ता च

हैं। उसकी निन्दा करते हैं। इसलिये स्थिर मन से यहीं पर रहकर विहार करो, आपके भाग्य में जो लिखा है, वह यहां भी मिल सकता है। भार्या के वचनों को सुनकर वह श्रेष्ठ ब्राह्मण सुमेधा बहुत प्रसन्न हुआ। कुछ समय पश्चात् वहां कौण्डिन्य नाम के श्रेष्ठ मुनि आये। उन मुनिवर को आया देखकर वह ब्राह्मण बहुत प्रसन्न हुआ। पत्नी सहित सुमेधा ब्राह्मण मुनिराज के समीप गया, दण्डवत प्रणाम करके बोला, मैं धन्य हूं, कृतार्थ हुआ हूं, आज मेरा जन्म सफल हो गया है जो बड़े भाग्य से आपके दर्शन हुए हैं। उस ब्राह्मण ने मुनिवर का सत्कार किया, बैठने को आसन दिया, उन का पूजन किया। फिर विधि पूर्वक भोजन कराकर, वह उत्तम स्त्री

परित्यज्य गन्तुकामोऽद्य वर्त्तते ॥३० ॥ अन्यदेशं परांल्लोकान् याचितुं परपत्तने ॥ रक्षितोऽस्ति मया विद्वन् हेतुभिः कैर्महत्तरैः ॥३१ ॥ नादत्तं लभ्यते किञ्चिदित्युक्त्वा स निवारितः ॥ मम भाग्यान्मुनीन्द्राद्य त्वमत्रैव समागतः ॥३२ ॥ दारिद्र्यं त्वत्प्रसादान्मे शीघ्रं नश्यत्यसंशयम् ॥ केनोपायेन विप्रेन्द्र दारिद्र्यं नश्येत् ध्रुवम् ॥३३ ॥ कथयस्व कृपासिन्धो व्रतं तीर्थं तपादिकम् ॥ श्रुत्वा तस्याः सुशीलाया भाषितं नश्यति मुनिपुंगव ॥३४ ॥ प्रोवाच प्रवरं चित्ते विचार्य व्रतमुत्तमम् ॥ सर्वापापौघशमनं दुःखदारिद्र्यनाशनम् ॥३५ ॥ परमा नाम विख्याता विष्णोस्तिथि-रनुत्तमा ॥ मलिम्लुचे तु या कृष्णा भुक्तिमुक्तिफलप्रदा ॥३६ ॥ तस्या उपोषणं कृत्वा धनधान्य-युतो भवेत् ॥ विधिना जागरैः साकं गीतनृत्यादिकं चरेत् ॥३७ ॥ धनदेन पुराचीर्णं व्रतमेतत्सुशो-

पूछने लगी, हे मुनिवर किस कार्य के करने से दरिद्रता का नाश हो, यह कहो? पूर्व जन्म के बिना दान से, धन और विद्या को न दिये बिना जो ऐसा घोर संकट आया है, वह कैसे दूर होगा? मेरे पति मुझे छोड़ कर विदेश जाने की इच्छा करते हैं। दूसरे देश में, पराये नगर में मांगने को जाना चाहते हैं, मगर मैंने उन्हें समझा कर रोक रखा है। अदत्त कुछ नहीं मिलता, ऐसा कहकर उन्हें रोका है। हे मुनीन्द्र, मेरे भाग्य से आपका यहां आगमन हुआ है। आपके आशीर्वाद से मेरा दरिद्र सर्वथा दूर हो जायेगा। हे मुनि श्रेष्ठ, कौन से उपाय से मेरा दरिद्र दूर होगा, निश्चय करके कहिये। ऐसा व्रत, तप, तीर्थ कहिये। मुनि श्रेष्ठ ने सुशीला के वचनों को सुनकर मन में उत्तम व्रत का विचार करके और सब पापों के समूह को शान्त करने वाला,

भनम् ॥ तदा तुष्टेन रुद्रेण धनानामधिपः कृतः ॥३८ ॥ हरिश्चन्द्रेण च कृतं धनानामधिपःकृतः ॥ पुनः प्राप्ता प्रिया तेन राज्यं निहतकण्टकम् ॥३९ ॥ तस्मात्कुरु विशालाक्षि व्रतमेतत्सुशोभनम् ॥ विधिना विधियुक्तेन समं जागरणेन च ॥४० ॥ इत्युक्त्वा तद्विधिं सर्वं कथयामास पाण्डव। प्रीत्या परमसंतुष्टस्ततो भक्त्या प्रसादतः ॥४१ ॥ पुनः प्रोवाच तं विप्रं पञ्चरात्रव्रतं शुभम्। यस्यानुष्ठानमात्रेण भुक्तिमुक्तिश्च प्राप्यते ॥४२ ॥ परमादिवसे प्रातः कृत्वा पौर्वाह्निकं विधिम् ॥ कुर्यात्सुनियमाञ्छक्त्या पञ्चरात्रव्रतादरात् ॥४३ ॥ प्रातः स्नात्वा निराहारो यस्तिष्ठेद्दिन-पञ्चकम् ॥ स यच्छेद्वैष्णवं स्थानं पितृमातृप्रियासमम् ॥४४ ॥ एकाशनस्तु यो भूयाद्दिनानां पञ्चकं नरः ॥ सर्वपापविनिर्मुक्तः स्वर्गलोके महीयते ॥४५ ॥ स्नात्वा यो भोजयेद्विप्रं दिनानां पञ्चकं नरः ॥ भोजितं तेन विधिना सदेवासुरमानुषम् ॥४६ ॥ पूर्णकुम्भं सुतो येन यो ददाति

दुःख तथा दारिद्रय का नाश करने वाले व्रत को कहा। मुनि ने कहा, हे विप्रवर, मलमास के कृष्ण पक्ष में परमा नाम की एकादशी आती है जो मुक्ति-भुक्ति को देने वाली है। उसका व्रत करने से मनुष्य धन-धान्य से युक्त हो जाता है। उत्तम सुव्रत को पहले कुबेर ने किया था। शिवजी ने प्रसन्न होकर उसे धन का स्वामी बना दिया था। राजा हरिश्चन्द्र ने किया तो उसे राज्य की प्राप्ति हो गयी। हे विशालाक्षि, ऐसे उत्तम व्रत को विधिपूर्वक करो, रात्रि को जागरण करो। हे राजन्, उस मुनिवर ने उस ब्राह्मण दम्पत्ति को पंचरात्रि व्रत करने का आदेश दिया। प्रातः काल स्नान करके, प्रातःकालका

द्विजातये ॥ दत्तं तेनैव सकलं ब्रह्माण्डं सचराचरम् ॥४७ ॥ तिल पात्रं तु यो दद्यात्स्नात्वा पञ्चदिनं नरः ॥ स भुक्त्वा विपुलान् भोगान्सूर्यलोके महीयते ॥४८ ॥ ब्रह्मचर्येण यस्तिष्ठेद्दिनानां पञ्चकं नरः ॥ स स्वर्गे भुञ्जते भोगान् स्ववेंश्याभः समं मुदा ॥४९ ॥ एवंविधं व्रतं साध्वि कुरु त्वं पतिना शुभे ॥ धनधान्ययुता भूत्वा स्वर्गं यास्यसि सुव्रते ॥५० ॥ इत्युक्ता सा व्रतं चक्रे कौण्डिन्येन यथोदितम् ॥ भर्त्रा समं भावयुता स्नात्वा मासि मलिम्लुचे ॥५१ ॥ पञ्चरात्रव्रते पूर्णे परायाः प्रियसंयुता ॥ साऽपश्यद्राजभवनादायान्तं नृपनन्दनम् ॥५२ ॥ दत्त्वा नवीनं भवनं भव्यं वस्तु-समन्वितम् ॥ वासयामास विधिना विधिना प्रेरितः स्वयम् ॥५३ ॥ दत्त्वा ग्रामं वृत्तिकरं ब्राह्मणाय

कृत्य करके, पंचरात्रि व्रत को आदर एवं शक्ति के अनुसार करें। प्रातःकाल स्नान करके जो मनुष्य पांच दिन तक निराहार रहता है, वह माता-पिता सहित विष्णुलोक को प्राप्त करता है। जो मनुष्य पांच दिन निरन्तर एक बार भोजन करके रहे, वह सब पापों से छूट कर स्वर्ग लोक में आनन्द से रहता है। जिसने पांच दिन तक स्नान कर ब्राह्मणों को भोजन करवाया उसने विधिपूर्वक देवता, असुर, मनुष्य समेत त्रिलोकी को भोजन करवा दिया। जो मनुष्य जल से भरे हुए कुम्भ को ब्राह्मण को देता है, उसने मानो चराचर सहित ब्रह्माण्ड का दान दिया। जो मनुष्य पांच दिन तक स्नान करके तिल पात्र को देता है, वह सम्पूर्ण भोगों को भोग कर सूर्य लोक में आनन्द करता है। जो मनुष्य पांच दिन तक स्नान करके ब्रह्मचर्य से रहता है, वह स्वर्ग में अप्सराओं के साथ भोगों को भोगता है। हे शुभे, पति समेत ऐसे व्रत को करके धन-धान्य से युक्त होकर स्वर्ग

सुमेधसे ॥ प्रसन्नस्तपसा राजा तं स्तुत्वा स्वगृहं ययौ ॥५४॥ मलिम्लुचस्य मासस्य पराया: परमादरात् ॥ उपोषणात्स कृष्णाया: पञ्चरात्रव्रतेन च ॥५५॥ सर्वपापविनिर्मुक्त: सर्वसौख्य-समन्वित: ॥ भुक्त्वा भोगान् प्रियासार्द्धमन्ते विष्णुपुरं ययौ ॥५६॥ ये करिष्यन्ति मनुजा: पराया व्रतमुत्तमम् ॥ पञ्चरात्रभवं पुण्यं मया वक्तुं न शक्यते ॥५७॥ पुष्कराद्यानि तीर्थानि गंगाद्या सरितस्तथा ॥ धेनुमुख्यानि दानानि तेन चीर्णानि सर्वथा ॥५८॥ गयाश्राद्धं कृतं तेन पितर: परितोषिता: ॥ व्रतानि तेन चीर्णानि व्रतखण्डोदितानि वै ॥५९॥ द्विपदां ब्राह्मण: श्रेष्ठो गौर्वरिष्ठा चतुष्पदाम् ॥ देवानां वा.ान: श्रेष्ठस्तथा माता मलिम्लुच: ॥६०॥ मलिम्लुचे पञ्चरात्रं महापापहरं स्मृतम् ॥ पञ्चरात्रे च परमा पद्मिनी पापशोषणी ॥६१॥ साऽप्यशक्तै: प्रकर्तव्या यथाशक्त्या

को प्राप्त करोगी। इस प्रकार वह कौण्डिन्य के कहने पर पति समेत स्नान करके मलमास में व्रत को करने लगी। पांच रात्रि व्रत पूर्ण होने पर राज भवन से आते हुए राजा के पुत्र को देखा। विधाता द्वारा प्रेरित उस राज पुत्र ने सब उपकरणों से युक्त ब्राह्मण को मकान बनाकर दिया। जीविका के उपार्जन के लिये सुमेधा को एक गांव देकर और ब्राह्मण की स्तुति करके वह राजा अपने घर को चला गया। हे राजन्, मलमास के पांच रात्रि व्रत को करने एवं परमा एकादशी का व्रत करने से वह ब्राह्मण दम्पति सब पापों से छूटकर, सब सुखों से युक्त सब भोगों को भोगकर अन्त में पत्नी समेत स्वर्ग को गया। इस परमा एकादशी के सेवन से पितर प्रसन्न हो जाते हैं। हे राजन्, जैसे द्विपदों में वेदपाठी ब्राह्मण श्रेष्ठ हैं, चतुष्पादों में गौ श्रेष्ठ

**विचक्षणैः ॥ मानुषं जनुरासाद्य न स्नातो यैर्मलिम्लुचः ॥६२॥ ते जन्मघातिनो नूनं नोपोष्य हरिवासरे ॥ चतुराशीति लक्षाणि लभन्ते योनिसङ्कटे ॥६३॥ प्राप्यते मानुषं जन्म दुर्लभं पुण्य-सञ्चयैः ॥ तस्मात्कार्यं प्रयत्नेन परमाया व्रतं शुभम् ॥६४॥ श्रीकृष्ण उवाच ॥ एतत्ते सर्वमाख्यातं यत्पृष्टोऽहं त्वयाऽनघ ॥ मलिम्लुचस्य मासस्य परमायाः समुद्भवम् ॥६५॥ तत्सर्वं ते समाख्यातं कुरुष्वावहितो नृप ॥६६॥ माहात्म्यं यदुपतिनोदितं निशम्य तच्चक्रे व्रतमथ स प्रियासमेतः ॥ भुक्त्वाऽसौ दिवि भुवि दुर्लभांश्च भोगान्नीतोऽसौ सुरवरमन्दिरं सुहृष्टः ॥६७॥ येऽप्येवं भुवि मनुजाः मलिम्लुचस्य सुस्नाताः शुभविधिना समाचरन्ति ॥ ते भुक्त्वा दिवि विभवं सुरेन्द्रतुल्यं गच्छेयुस्त्रिभुवनवन्दितस्य गेहम् ॥६८॥**

है, देवताओं में इन्द्र हैं, वैसे ही सभी मासों में मलमास श्रेष्ठ है और मलमासों में पापों को हरने वाले पांच दिन और उसमें भी परमा और पद्मा एकादशी उत्तम है। जिसने हरिवासर का व्रत कभी नहीं किया वे चौरासी लाख योनियों में घूमता रहता है। श्री कृष्ण बोले, हे निष्पाप राजन्, मलमास और परमा का जो फल तुमने पूछा वह मैंने कह दिया है। इसलिये हे नृप सावधान होकर व्रत को करो। यदुपति श्री कृष्ण द्वारा ऐसा कहने पर युधिष्ठिर सहित सभी पाण्डवों एवं द्रौपदी ने व्रतों को किया। सब भोगों को भोगकर उन्होंने अन्त में विष्णु लोक को प्राप्त किया। परमा एकादशी का माहात्म्य सम्पूर्ण हुआ।

**एकादशी माहात्म्यं सम्पूर्णम्**

# मधुराष्टकम्

अधरं मधुरं वदनं मधुरं नयनं मधुरं हसितं मधुरम्।
हृदयं मधुरं गमनं मधुरं मधुराधिपतेरखिलं मधुरम् ।।१ ।।
वचनं मधुरं चरितं मधुरं वसनं मधुरं वलितं मधुरम्।
चलितं मधुरं भ्रमितं मधुरं मधुराधिपतेरखिलं मधुरम् ।।२ ।।
वेणुर्मधुरो रेणुर्मधुरः पाणिर्मधुरः पादौ मधुरौ।
नृत्यं मधुरं सख्यं मधुरं मधुराधिपतेरखिलं मधुरम् ।।३ ।।
गीतं मधुरं पीतं मधुरं भक्तं मधुरं सुप्तं मधुरम्।
रूपं मधुरं तिलकं मधुरं मधुराधिपतेरखिलं मधुरम् ।।४ ।।
करणं मधुरं तरणं मधुरं हरणं मधुरं रमणं मधुरम्।
वमितं मधुरं शमितं मधुरं मधुराधिपतेरखिलं मधुरम् ।।५ ।।

गुञ्जा मधुरा माला मधुरा यमुना मधुरा वीची मधुरा।
सलिलं मधुरं कमलं मधुरं मधुराधिपतेरखिलं मधुरम् ॥६ ॥
गोपी मधुरा लीला मधुरा युक्तं मधुरं मुक्तं मधुरम्।
दृष्टं मधुरं शिष्टं मधुरं मधुराधिपतेरखिलं मधुरम् ॥७ ॥
गोपा मधुरा गावो मधुरा यष्टिर्मधुरा सृष्टिर्मधुरा।
दलितं मधुरं फलितं मधुरं मधुराधिपतेरखिलं मधुरम् ॥८ ॥

## मङ्गलगीतम्

श्रितकमलाकुचमण्डल धृतकुण्डल ए। कलितललितवनमाल जय जय देव हरे ॥१ ॥
दिनमणिमण्डलमण्डन भवखण्डन ए। मुनिजनमानसहंस जय जय देव हरे ॥२ ॥
कालियविषधरगञ्जन जनरञ्जन ए। यदुकुलनलिनदिनेश जय जय देव हरे ॥३ ॥
मधुमुरनरकविनाशन गरुडासन ए। सुरकुलकेलिनिदान जय जय देव हरे ॥४ ॥

अमलकमलदललोचन भवमोचन ए। त्रिभुवनभवननिधान जय जय देव हरे ॥५॥

जनकसुताकृतभूषण जितदूषण ए। समरशमितदशकण्ठ जय जय देव हरे ॥६॥

अभिनवजलधरसुन्दर धृतमन्दर ए। श्रीमुखचन्द्रचकोर जय जय देव हरे ॥७॥

तव चरणे प्रणता वयमिति भावय ए। कुरु कुशलं प्रणतेषु जय जय देव हरे ॥८॥

श्रीजयदेवककवेरुदितमिदं कुरुते मुदम्। मङ्गलमञ्जुलगीतं जय जय देव हरे ॥९॥

## श्रीविष्णोरष्टाविंशतिनामस्तोत्रम्

किं नु नाम सहस्राणि जपते च पुनः पुनः।
यानि नामानि दिव्यानि तानि चाचक्ष्व केशव ॥१॥

मत्स्यं कूर्मं वराहं च वामनं च जनार्दनम्।
गोविन्दं पुण्डरीकाक्षं माधवं मधुसूदनम् ॥२॥

पद्मनाभं सहस्राक्षं वनमालिं हलायुधम्।
गोवर्धनं हृषीकेशं वैकुण्ठं पुरुषोत्तमम् ॥३॥

विश्वरूपं वासुदेवं रामं नारायणं हरिम्।
दामोदरं श्रीधरं च वेदाङ्गं गरुडध्वजम्।।४।।
अनन्तं कृष्णगोपालं जपतो नास्ति पातकम्।
गवां कोटिप्रदानस्य अश्वमेधशतस्य च।।५।।
कन्यादानसहस्त्राणां फलं प्राप्नोति मानवः।
अमायां वा पौर्णमास्यामेकादश्यां तथैव च।।६।।
सन्ध्याकाले स्मरेन्नित्यं प्रातःकाले तथैव च।
मध्याह्ने च जपन्नित्यं सर्वपापैः प्रमुच्यते।।७।।

# १. भजन

ऐसी कर कृपा गुरु देव मेरा मन कदे वी डोले न
ऐसा रस रसना बिच भर दे कौड़ा शब्द बी बोले न

दुखियां नूं देख दुखी मन होवे, दुख अपना किसे अगे न रोवे
करके दूजे दा नुकसान कदे सुख अपना होवे न
ऐसी कर कृपा गुरु देव मेरा मन कदे वी डोले न..........

मेरी जीवा हंस बन जाये, सुच्चे मोती चुग-चुग लयावें
विषय विकारां बाली गठरी कोए बांग फरोले न
ऐसी कर कृपा गुरु देव मेरा मन कदे वी डोले न..........

माया पल पल ते भरमाये, काल कराल तों जी घबरावें
सुन्दर रूप तेरा अखियां तो ओहले होवे कदे वी न
ऐसी कर कृपा गुरु देव मेरा मन कदे वी डोले न..........

दास न दास दे सतगुरु ताई डोलन कोलो सदा बचाई
भक्ति प्रेम तेरे दा सौदा इह घट कदे बी तोले न
ऐसी कर कृपा गुरु देव मेरा मन कदे वी डोले न..........

# २. भजन

तेरी मुरली की धुन सुन के मैं वृन्दावन चली आई........
मैं वृन्दावन चली आई........

सुना मैंने मोहन प्यारे के तुम मुरली बजाते हो........
तेरे मुरली बजाने को मैं मुरली साथ लाई हूं।
तेरी मुरली की धुन सुन के मैं वृन्दावन चली आई........

सुना मैंने मोहन प्यारे, कि तुम माखन ही खाते हो
तेरे माखन खाने को, मैं माखन साथ लाई हूं।
तेरी मुरली की धुन सुन के मैं वृन्दावन चली आई........

सुना मैंने मोहन प्यारे के तुम गुऊएं चराते हो
तेरे गऊएं चराने को मैं गऊएं साथ लाई हूं।
तेरी मुरली की धुन सुन के मैं वृन्दावन चली आई........

सुना मैंने मोहन प्यारे कि तुम रास रचाते हो
तेरे रास रचाने को मैं सखियां साथ लाई हूं।
तेरी मुरली की धुन सुन के मैं वृन्दावन चली आई........

## ३. भजन

लुट्टी-लुट्टी बथेरी मौज लुटी जदो दा तेरा लड़ फड़िया..........
जदो दी निहारी दाती तेरी तस्वीर सी
सुध बुध भुल गई मैं अपने शरीर दी
मेरी घर दे कमा तो हो गई, छुट्टी जदो दा तेरा लड़ फड़िया
लुट्टी-लुट्टी बथेरी मौज लुटी..........
अपने बेगानिया ने फेर लईया अखियां
असी ता उन्मीदा दाती तेरे उते सुटिया
जिन्द जान हवाले तेरे किती, जदो दा तेरा लड़ फड़िया
लुट्टी-लुट्टी बथेरी मौज लुटी..........
जदो दा मैं दाती तेरा दर्शन पा लिया
रोग अवलड़ा मैं जिन्दगी नू ला लिया
मैं ता नाम बाली पी लई घुट्टी, जदो दा तेरा लड़ फड़िया
लुट्टी-लुट्टी बथेरी मौज लुटी..........
जदो दी मैं दाती तेरे दर उते आ गई
झोलियां मैं भर एथो सब कुछ लै गई
होई अमीर मैं गरीबीयां तो छुट्टी, जदो दा तेरा लड़ फड़िया
लुट्टी-लुट्टी बथेरी मौज लुटी..........

# आरती ओ३म् जय जगदीश हरे!

ॐ जय जगदीश हरे, स्वामी जय जगदीश हरे। भक्त जनों के संकट, क्षण में दूर करे ॥१॥
जो ध्यावे फलपावे, दुख बिनसे मन का, स्वामी। सुख सम्पत्ति घर आवे, कष्ट मिटे तन का ॥२॥
मात-पिता तुम मेरे शरण गहूं किसकी, स्वामी। तुम बिन और न दूजा, आस करूंमैं जिसकी ॥३॥
तुम पूरण परमात्मा, तुम अन्तर्यामी, स्वामी तुम। पारब्रह्म परमेश्वर, तुम सब के स्वामी ॥४॥
तुम करुणा के सागर, तुम पालन कर्ता, स्वामी तुम। मैं मूरख खल कामी, कृपा करो भर्ता ॥५॥
तुम हो एक अगोचर, सबके प्राणपति, स्वामी सब। किस विधि मिलूं दयामय! तुमको मैं कुमति ॥६॥
दीनबन्धु दुख हर्ता, तुम रक्षक मेरे, स्वामी तुम। अपने हाथ उठाओ, द्वार पड़ा तेरे ॥७॥
विषय-विकार मिटाओ, पाप हरो देवा, स्वामी पाप। श्रद्धा भक्ति बढ़ाओ, संतन की सेवा ॥८॥
तन, मन, धन जो कुछ है, सब ही है तेरा, स्वामी सब। तेरा तुझको अर्पित, क्या लागे मेरा ॥९॥
ॐ जय जगदीश हरे, स्वामी जय जगदीश हरे। भक्त जनों के संकट, क्षण में दूर करे।



